Digitized By SIddhanta eGangotri Gyaan Kosha

५.२

# वैदिकध्वनिविज्ञानम्

(13)



ग्रन्थकारः

डा० जमुनापाठकः

देववाणी प्रकाशन, वाराणसी

१९९२

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By Siddhanta eGangotri Gyaan Kosha

"वैदिक अग्नि विज्ञान"




## घोषणा-पत्र

१- पुस्तक का विषय - "वेद" 1378

२- लेखक का नाम और पता- डा० जमुना पाठक
संस्कृत विभाग, काशी हिन्दू विश्वविद्यालय
वाराणसी

३ - संस्था का नाम- काशी हिन्दू विश्वविद्यालय
वाराणसी।

४ - लेखक का प्रमाणपत्र -
(क) मैं प्रमाणित करता हूं कि मेरी उपर्युक्त रचना मौलिक है और सन् १९९२ में प्रथम बार प्रकाशित हुई है।
(ख) यह रचना शोध ग्रन्थ नहीं है।
(ग) मैं जन्म से उत्तर प्रदेश का निवासी हूं।

लेखक का हस्ताक्षर
जमुना पाठक
४. १. १९९४

CC-0, Panini Kanya Maha Vidyalaya Collection.

# वैदिकध्वनिविज्ञानम्

Digitized by Siddhanta eGangotri Gyaan Kosha

ग्रन्थकारः

डा० जमुनापाठकः

एम० ए०, पी-एच० डी०

संस्कृत-विभागस्थः

काशीहिन्दूविश्वविद्यालये

वाराणस्याम्



देववाणी प्रकाशन, वाराणसी

१९९२

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha

पुस्तकप्राप्तिस्थानम्
सुशील कुमार पाठक
शारदा—विला
हसनपुर डगरा, सैदपुर
गाजीपुर

( सर्वेऽधिकाराः लेखकाधीनाः )

प्रथमसंस्करणम् -- १९९२
मूल्यम् : एकादशरूप्यकाणि

मुद्रक :
श्री विद्या प्रेस,
छित्तूपुर, बी० एच० यू० वाराणसी।

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha




परमादरणीयानां गुरुवर्याणां

प्रोफेसर श्रीनारायणमिश्रमहोदयानां

करकमलयोः सादरं सप्रश्रयं

समर्पयति

जमुनापाठकः

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha




## प्राक्कथनम्

भाषाविज्ञानस्य क्षेत्रे ध्वनिविज्ञानस्य महत्त्वपूर्णं स्थानम्। भाषायाः ध्वनिविषयकं विशिष्टं ज्ञानं ध्वनिविज्ञानमुच्यते। भाषायाः सम्यगवबोधनार्थं तत्र प्रयुक्तानां ध्वनीनां विशेषाध्ययनमपरिहार्यम्। अत्र ध्वनिशब्दः वर्णशब्दस्य पर्यायः। एवं ध्वनिविज्ञानं वर्णविज्ञानमेव। वेदाः निखिलविश्ववाङ्मयेषु सर्वप्राचीनग्रन्थाः। ध्वनिविज्ञानविषयकचिन्तनमस्माकं भारतदेशे वैदिककालादेव प्रादुर्भूतम्। अत एव तस्मादेव कालात्प्रादुर्भूतं वैदिकध्वनिविज्ञानविषयकचिन्तनमपि ध्वनिविज्ञानस्य क्षेत्रे प्राचीनतमम्। वैदिकाचार्यैः वेदमन्त्राणां सुरक्षार्थं सम्यगवबोधनार्थञ्च ध्वनिविज्ञानविषयका अनेके ग्रन्थाः प्रतिपादिताः। वैदिककाले ध्वनिविज्ञानं शिक्षाशास्त्रमित्यभिहितम्। परवर्तिकाले वेदानां प्रतिचरणमधिकृत्य ध्वनिविज्ञानविषयकाः प्रातिशाख्यग्रन्था अपि विरचिताः। एवमेव शिक्षाग्रन्थेषु प्रातिशाख्येषु च वैदिकध्वनिविज्ञानविषयकानि तथ्यानि विहितानि। वैदिकध्वनिवैज्ञानिकतथ्यानि तत्र तत्रैवोपलभ्यन्ते।

वर्णसमाम्नायं, वर्णोच्चारणं, संयोगविषयकोच्चारणवैशिष्ट्यं, उदात्तादिस्वराः सन्धिश्च प्रमुखतया तेषां प्रतिपाद्याः। यद्यपि प्राचीनवैदिकध्वनिविद्भिः ध्वनिविषयकमतिसूक्ष्मचिन्तनं कृतं स्वग्रन्थे प्रतिपादितञ्च, परञ्चातिगूढत्वात् तेषामवबोधनमतिश्रमसाध्यं कठिनञ्च। तत्र सूक्ष्मविधानेन तेषां ध्वनितथ्यं सरलतयाबोधनार्थमशक्यम्। यतो हि तत्र सम्यग्रूपेण ध्वनिवैज्ञानिककारणं न प्रस्तुतम्।

ग्रन्थेऽस्मिन् शिक्षाग्रन्थेषु प्रातिशाख्येषु च विहितानां ध्वनिवैज्ञानिकतथ्यानां स्पष्टीकरणार्थं सारल्येनावबोधनार्थं च प्रयत्नं कृतम्। नः

ग्रन्थोऽयं षट्प्रकरणेषु विभक्तः। प्रथमं वर्णसमाम्नायप्रकरणम्। प्रकरणेऽस्मिन् वैदिकभाषायामुपलभ्यमाणानां वर्णानां विवेचनं कृतम्। द्वितीयं वर्णोच्चारणप्रकरणम्। अत्र सर्वेषां वर्णानामुच्चारणप्रक्रिया निर्दिष्टा। तत्र बाह्यप्रयत्नमाभ्यन्तरप्रयत्नं, स्थानं, करणं, परिमाणं तद्विषये चाचार्याणां चरणभेदतः मतवैभिन्न्यं प्रदर्शितम्। तृतीयं वर्ण-

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



स्वरूपप्रकरणम् । यत्र ऋकारादिसमानाक्षराणामेकारादिसन्ध्यक्षराणां च स्वरूपं प्रतिपादितम् । चतुर्थं संयोगप्रकरणम् । प्रकरणेऽस्मिन् संयुक्तव्यञ्जनानामुच्चारणे यद्वैशिष्टयं तेषां ध्वनिवैज्ञानिककारणं विचारितम् । पञ्चमं स्वरप्रकरम् । अत्र वैदिकभाषायां प्रयुक्तानामुदात्तादिस्वराणां विवेचनं कृतम् । षष्ठं सन्धिप्रकरणम् । अत्र सन्धिभिः यदुच्चारणसौविध्यं तेषां ध्वनिवैज्ञानिकदृष्ट्या निरूपणं विद्यते ।

वैदिकध्वनिवैज्ञानिकतथ्यनिरूपकं ग्रन्थमिमं विद्वद्वरेण्यानां सेवायां समर्पयन्नामोदमनुभवामि ।

अस्तु,

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ।।

।। इति शम् ।।

रामनवमी,
विक्रमसंवत्, २०४६

विदुषां वशंवदः
जमुनापाठकः

———

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha

# वैदिकध्वनिविज्ञानम्

## अथ वर्णसमाम्नायप्रकरणम्

नारायणं गुरुं नत्वा श्रिया सह विभूषितम् ।
विश्वविद्यालये काश्यां हिन्दुना समलङ्कृते ॥ १ ॥

संस्कृतस्य विभागे च अध्यक्षपदभूषितम् ।
वरेण्यं विदुषाञ्चैव आचार्यं प्रमुखन्तथा ॥ २ ॥

आचार्यं शौनकं चैव कात्यायनं महामुनिम् ।
अज्ञातं तं कृतं येन तैत्तिरीयस्य पार्षदम् ॥ ३ ॥

सर्वांश्च वैदिकाचार्यान् शिक्षाकारांस्तथैव च ।
वैदिकं ध्वनिविज्ञानं संक्षेपतः कृत मया ॥ ४ ॥

पूर्वं वर्णसमाम्नायं कथयामि सुविस्तरम् ।
द्विधा तु पठिता वर्णाः स्वराश्च व्यञ्जनानि च ॥ ५ ॥

निरपेक्षाः स्वराः प्रोक्ताः स्वयमुच्चारितास्तु ये ।
सापेक्षाणि स्वरान्यानि स्वरेणोच्चारणाद् ध्रुवम् ॥ ६ ॥

स्वराः स्वयञ्च राजन्ते व्यञ्जनानि स्वरेण च ।
एवं स्वरप्रधानत्वमुक्तं ध्वनिविशारदैः ॥ ७ ॥

स्वरास्तु द्विविधा ज्ञेयाः तेषां रूपविभेदतः ।
समानोच्चारणादाद्यः समानाक्षरसंज्ञकः ॥ ८ ॥

त्रिविधं तं विजानीयाद् ह्रस्वो दीर्घः प्लुतस्थता ।
अकारश्च इकारश्च ह्रस्व इति मतः बुधैः ॥ ९ ॥

उकारश्च ऋकारश्च ह्रस्व लृकार एव तु ।
आकारश्च ईकारश्च ऊॠकारौ तथैव च ॥१०॥

स्वरान्दीर्घान् विजानीयात् ॡकारश्चोत्तमः स्मृतः ।
आ३कारश्चापि ई३कारो ऊ३ॠ३कारौ तथैव च ॥११॥

स्वराः प्लुता विनिश्चेया ॡ३कारश्चोत्तमः मतः ।
पञ्चदश तु वर्णाः स्युः समानाक्षरसंज्ञकाः ॥१२॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



कतिपयमते बोध्या एते मूलस्वरा इति ॥१३॥

ऋवर्णो रेफसंश्लिष्टो ऌवर्णः लकारेण च।
तौ समानाक्षरौ ज्ञेयौ समोच्चारणकारणात्[1] ॥१४॥

प्रयोजनवती संज्ञा कृता शास्त्रेषु दृश्यते[2]।
तत्राभावान्न बाध्यते समानाक्षरता बुधैः ॥१५॥

संश्लेषेण द्वयोः ये च निष्पद्यन्ते स्वराक्षराः।
सन्ध्यक्षरा इति प्रोक्ता महर्षिभिः पुरातनैः ॥१६॥

सन्ध्यक्षरास्तु विज्ञेया दीर्घाः प्लुता द्विधा बुधैः
एऐकारौ च ओकारः औकारश्च तथा भवेत् ॥१७॥

दीर्घसन्ध्यक्षरा ज्ञेयाः प्लुतसन्ध्यक्षरास्तु ये।
ए३कारश्चापि ऐ३कार ओ३औ३कारौ तथैव च ॥१८॥

सन्ध्यक्षराश्च वर्णाः स्युः अष्टेतिसङ्ख्यका मताः।
प्रयोजनस्याभावेन न त्वत्र प्लुतयोजनम्[3] ॥१९॥

त्रयोविंशतिसङ्ख्याकाः स्वराः प्रोक्ता महर्षिभिः।
नामिनस्तु स्वरा सर्वे स्युरवर्णविवर्जिताः ॥२०॥

व्यञ्जनान्युपदिश्यन्ते स्पर्शान्तस्थोष्मणस्तु ये।
पञ्चविंशतिसङ्ख्याकाः स्पर्शाः सन्ति मता बुधैः ॥२१॥

कवर्गः कखगा घङौ चवर्गः चछजा झञौ।
टवर्गः टठडा ढणौ तवर्गः तथदा धनौ ॥२२॥

पवर्गः पफबा भमौ पञ्च वर्गाः स्मृता बुधैः।
सङ्ख्यानुसारवर्गेषु संज्ञा प्रोक्ता महर्षिभिः ॥२३॥

प्रथमाः कचटाः तपौ द्वितीयाः खछठाः थफौ।
तृतीया गजडा दबौ चतुर्था घझढा धभौ ॥२४॥

---

१. ऋऌवर्णे रेफलकारौ संश्लिष्टावश्रुतिधारावेकवर्णौ (वा० प्रा० ४।१८८)
२. अष्टौ समानाक्षराण्यादितः (ऋ० प्रा० १।१)
नवादितः समानाक्षराणि (तै० प्रा० १।२)
सिमादितोऽष्टौ स्वराणाम् (वा० प्रा० १।४)
३. ततश्चत्वारि सन्ध्यक्षराण्युत्तराणि (ऋ० प्रा० १।२)

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



वर्गाणां पञ्चमा वर्णा भवन्त्युत्तमसंज्ञकाः।
तेषामियं परा संज्ञा अनुनासिक एव तु ॥२५॥

एतदन्ये च ये स्पर्शाः निरनुनासिकाः स्मृताः।
यरलवास्तु अन्तस्थाः प्रोक्ता एव महर्षिभिः ॥२६॥

स्पर्शोष्मयोः स्थिता मध्ये अन्वर्थसंज्ञका मताः।
स्थाने वा मध्यभागेन उच्चारिता भवन्ति हि ॥२७॥

जिह्वामूल्यः शकारस्तु षसकारौ तथैव च।
उपध्मान्यो हकारस्तु ऊष्माण इति उच्यते ॥२८॥

ऊष्मवर्णविषये तु मतसाम्यं न दृश्यते।
अनुस्वारो विसर्गश्च शौनकेनात्र योजितः[१] ॥२९॥

कौत्सेन च विसर्गस्तु केवलमत्र योजितः।
षडेते सन्ति ऊष्माणः तैत्तिरीयस्य पार्षदे[२] ॥३०॥

शषसहा हि ऊष्माणः कात्यायनेन स्वीकृताः[३]।
अन्ये अयोगवाहास्तु इति तस्य यथा मतम् ॥३१॥

जिह्वामूल्यो विसर्गश्च उपध्मानीय एव तु।
अनुस्वारो यमश्चैते नासिक्यन्तु तथैव च ॥३२॥

अयोगवाहसंज्ञाः स्युः सर्वे वर्णा यथामतम्[४]।
न स्वयोगप्रयोज्यास्तु वर्णा एते भवन्ति हि ॥३३॥

एवमयोगवाहस्तु संज्ञा अन्वर्थिकी भवेत्।
एते वर्णा हि पूर्वस्य योगवाहत्वमिष्यते ॥३४॥

अतः संज्ञैव एतेषां योगवाहः समुच्यते।
कखयोः परयोः यस्तु विसर्जनीयो दृश्यते ॥३५॥

---

२. उत्तरेऽष्टा ऊष्माणः (ऋ० प्रा० १।१०)

२. परे षडूष्माणः (तै० प्रा० १।९)

३. अथोष्माणः। शिति षिति सिति हिति (वा० प्रा० ८।१६-१७)

४. अथायोगवाहः। ≍ क इति जिह्वामूलीयः। ≍ प इति उपध्मानीयः।
अं इति अनुस्वारः। अः इति विसर्जनीयः। हुं इति नासिक्यः।
कुं खुं गुं घुं इति यमाः (वा० प्रा० ८।१८-२४)

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



जिह्वामूलीयसंज्ञया स उच्यते महर्षिभिः ।
पफयोः परयोरेव उपध्मानीय उच्यते ॥३६॥

जिह्वामूल्य उपध्मान्यस्तु पराश्रितो जायते ।
तयोः कृतेऽपि संज्ञैषा अन्वर्थिकी भवेद् ध्रुवम् ॥३७॥

ऊष्मण्येव समाहारः यत्कृतः तैत्तिरीयकैः ।
तदेव उपयुक्तं तु नान्यथा भवेत्क्वचित् ॥३८॥

ऋचायां स्वरयोर्मध्ये डढकारौ भवेद् यदा ।
प्राप्येते सन्धिना तौ तु ळळ्हकारौ अनुक्रमात् ॥३९॥

एतावपि स्वतन्त्रौ हि वर्णौ स्यातां च छन्दसाम् ।
विकारत्वादिमौ वर्णौ नाप्नुतौ वर्णसम्पदाम् ॥४०॥

व्यञ्जने स्वरभक्तिस्तु पठिता जायते क्वचित् ।
क्वचित्तु वर्णमालायां न तस्याः सन्निधिः भवेत् ॥४१॥

एते वर्णाः समाख्यातः पूर्वध्वनिविशारदैः ।
वैदिकं लौकिकं सर्वं वाङ्मयमत्र दृश्यते ॥४२॥

॥ इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते
वैदिकध्वनिविज्ञाने वर्णसमाम्नायप्रकरणम् ॥

## अथ वर्णोच्चारणप्रकरणम्

आकाशात्प्रभवः वायुः वायुना वर्णराशयः ।
वायुरेव स्वरूपः स्यात् वर्णानामिति पूर्वजैः ॥ १ ॥

उच्चारणे तु वर्णानां वायुर्भवति कारणम् ।
सः सम्यक्करणं प्राप्य ध्वनिरूपेण जायते ॥ २ ॥

उत्पद्यते ध्वनिर्यथा शङ्खवेण्वादिभिस्सदा ।
प्रयत्नेन तथैव च वर्णमुत्पादयत्ययम् ॥ ३ ॥

फुफ्फुसान्निःसरन् वायुः कण्ठमायात्यविकृतम् ।
तत्रस्थे स्वरयन्त्रे तु प्रथमं विकृतः भवेत् ॥ ४॥

कण्ठे तु स्वरयन्त्रं हि स्थितास्तत्र स्वरतन्त्रयः ।
सङ्कोचं च विकोचं च जातं बाह्ययत्नतः ॥५॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



संवारं च विवारं च बाह्ययत्नद्वयं मतम् ।
संवारेण विकोचं च जायते स्वरतन्त्रिषु ॥६॥

संवृतं स्वरयन्त्रं तु घर्षणेन सरत्ययम् ।
द्रव्यरूपं च नादाख्यं घोषाणां मूलकारणम् ॥७॥

मूलकारणमेव स्याद् उच्चारणे स्वरस्य च ।
सङ्कोचं तु विवारेण जायते स्वरतन्त्रिषु ॥८॥

विवृतं स्वरयन्त्रं तु निर्बाधेन सरत्ययम् ।
श्वासाख्यं द्रव्यरूपं चाघोषाणां मूलकारणम् ॥९॥

अन्वर्थसंज्ञया क्वचिद् अनुप्रदानमुच्यते ।
यतो हि विकृतम् एतद् मुखमनुप्रदीयते ॥१०॥

अनुप्रदानसंज्ञया तु बाह्ययत्नमिष्यते ।
अनुप्रदीयतेऽनेन श्वासो नादो मुखन्तथा ॥११॥

जायत्वाद् स्वरतन्त्रिषु मुखस्थविवराद् बहिः ।
बाह्यप्रयत्नमिष्यते वैदिकध्वनिचिन्तकैः ॥१२॥

बाह्यप्रयत्नतः वर्णास्तु द्विधा वर्णसम्पदाम् ।
अघोषान्सघोषश्च प्रोक्तः पूर्वमहर्षिभिः ॥१३॥

द्वितीयः प्रथमोऽघोषः हवर्जं चोष्मणस्तथा ।
अवशिष्टं तु व्यञ्जनं सर्वं घोषं मतं बुधैः ॥१४॥

एकेषां तु हकारस्य हकारं मूलकारणम् ।
संवारञ्च विवारञ्च सहैव यत्र जायते ॥१५॥

तदा तु स्वरतन्त्र्यः जाताः स्वाभाविकी सदा ।
सामान्यं स्वरयन्त्रं हि यत्नेन विद्यते ध्रुवम् ॥१६॥

कण्ठस्य निःसृतो वायुः भवेद् हकारसंज्ञकः ।
एवं बाह्यप्रयत्नं तत्परिणामं निरूपितम् ॥१७॥

श्वासनादौ मुखं प्राप्य स्थानेषु करणैर्हि तौ ।
जातौ तु विकृतौ तत्र आभ्यन्तरप्रयत्नतः ॥१८॥

यत्नमिदं मुखस्थं स्याद् आस्ययत्नं तथैव च ।
क्रियन्तेऽनेन वर्णास्तु तस्मात्करणमुच्यते ॥१९॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



विवृतं संवृतञ्चैव तथा स्पृष्टं मतं पुनः ।
ईषत्स्पृष्टं च विज्ञेयम् अर्धस्पृष्टं पुनश्च यत् ॥२०॥

एतैरेव प्रयत्नैस्तु मुखस्थौ श्वासनादकौ ।
स्थानेषु करणैः योगाद् नानारूपेषु विकृतौ ॥२१॥

विवृतेन प्रयत्नेन विवृतं जायते मुखम् ।
करणस्योपसंहारः स्थाने भवति केवलम ॥२२॥

निःसरति सदा वायुः निर्बाधेन मुखाद् बहिः ।
स्वराणां विवृतं ज्ञेयं यदुक्तं ध्वनिचिन्तकैः ॥२३॥

संवृतेन प्रयत्नेन सामान्या तु मुखस्थितिः ।
अकारस्य प्रयत्नं तु संवृतमिति निश्चितम् ॥२ ॥

स्थानेषु करणैः पूर्णं स्पर्शं स्पृष्टप्रयत्नतः ।
पूर्णतया मुखे वायुः अवरुद्धस्तु जायते ॥२५॥

विमोक्षाद् विकृतः वायुः स्फुटितस्तु यदा भवेत् ।
तदा श्रुतिपथं जातो वर्णः श्रवणकर्तॄणाम् ॥२६॥

स्पर्शस्योच्चारणे कार्ये स्पृष्टं यत्नं हि जायते ।
ईषत्स्पृष्टप्रयत्नेन मध्येन करणेन च ॥२७॥

स्थाने स्पर्शं भवेत् पार्श्वं विवृतमुपजायते ।
एवञ्च पार्श्वभागाभ्यां वायोर्निर्गमः जायते ॥२८॥

ईषत्स्पृष्टः तु अन्तस्थः कथितः पूर्वपूर्वजैः ।
स्वरस्पर्शप्रयत्नाभ्याम् उच्चार्यो जायते ध्रुवम् ॥२९॥

अर्धस्वरश्च कथितो अधिस्पर्शश्च पूर्वजैः ।
अर्धस्पृष्टप्रयत्नेन करणस्यान्तःस्पर्शनम ॥३०॥

मध्ये तु विवृतञ्चैव वायुः सरति घर्षितः ।
संघर्षेण च सोष्मत्वं वायोरिति सुनिश्चितम् ॥३१॥

सोष्मत्वेन जनित्वाद्ध ऊष्मन्नित्यभिधीयते ।
संघर्षणेन एते तु संघर्षीसंज्ञया स्मृताः ॥३२॥

ऊष्मवर्णप्रयोगे तु अर्धस्पृष्टं सदा भवेत् ।
आभ्यन्तरप्रयत्नेन स्याद् वायुः विकृतो मुखे ॥३३॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



स्थानकरणयोस्तत्र सहयोगमपेक्षते।
स्थानेषु करणैः वायुः नानारूपेषु जायते ॥३४॥
समर्थश्च प्रयोगे तु वर्णानां विकृतः सदा।
स्थानञ्च करणञ्चात्र निरूप्यते विधानतः ॥३५॥
श्वासनादात्मको वायुः याति यदा मुखे पुनः।
विकृतः जायते यत्र स्थानमङ्गं स्थिरं मतम् ॥३६॥
विक्रियते मुखे वायुः येनाङ्गेन तथैव च।
करणं तं विजानीयात् कथनं तु महर्षीणाम् ॥३७॥
करणेनोपसंहारः स्वरस्योच्चारणे भवेत्।
व्यञ्जनस्य भवेत्स्थाने स्पर्शमिति च पूर्वजैः ॥३८॥
अवर्णो जायते कण्ठे एके ओष्ठहनू मतः[1]।
इवर्णो जायते तालौ ओष्ठे उवर्णः जायते ॥३९॥
जिह्वामूले ऋवर्णस्तु[2] मतसाम्यं न दृश्यते।
मूर्ध्नि स्थाने तु एकेषां[3] वर्स्वे अन्यैर्भवेद् ध्रुवम्[4] ॥४०॥
लृवर्णो जिह्वामूले तु[2] दन्ते इत्यपरे विदुः[5]।
एकारो जायते तालौ ओष्ठे ओकारः जायते ॥४१॥
ऐकारः कण्ठतालौ स्यात् कण्ठोष्ठे औ भवेद् ध्रुवम्।
कवर्गो जिह्वमूले तु[6] कण्ठे एको हि मन्यते[7] ॥४२॥

---

१. अवर्णे नातिसंहृतमोष्ठहनू नातिव्यस्तम् (तै० प्रा० २।१२)

२. ऋकारलृकारौ अथ षष्ठ ऊष्मा जिह्वामूलीया प्रथमः कवर्गः (ऋ० प्रा० १।४१)

३. ऋटुरषाणां मूर्धा (पा० सू० १।१।९ सिद्धान्तकौमुद्याम्)

४. एकेषां वर्स्वस्थानं जिह्वाहनू च करणम् (तै० प्रा० २।१८ वै० भा०)

५. लृलसितादन्ते (वा० प्रा० १।६९)

६. ऋ ≍ कौ जिह्वामूले ( वा० प्रा० १।६५ ) ऋकारलृकारौ अथ षष्ठ ऊष्मा जिह्वामूलीया प्रथमः कवर्गः (ऋ० प्रा० १।४१) जिह्वामूले ≍ क (ऋ०तं०४)

७. अकुहविसर्जनीयानां कण्ठः (पा० सू० १।१।९ सिद्धान्तकौमुद्याम्)

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



हनुमूले च एकेषां[1] मतसाम्य न दृश्यते।
चवर्गो जायते तालौ मूर्ध्नि टवर्गः जायते ॥४३॥
तवर्गो जायते दन्ते ओष्ठे पवर्गः जायते।
यकारो जायते तालौ बर्स्वे रकारः दृश्यते[2] ॥४४॥
हनुमूले रकारस्तु[3] दन्तमूलेषु वा पुनः[4]।
प्रत्यग्वा दन्तमूलेभ्यः[5] मूर्धनि इति चापरे[6] ॥४५॥
लकारस्य प्रयोगेऽपि मतसाम्यं न दृश्यते।
दन्तमूले च इत्येके[7] दन्ते एकस्तु मन्यते[8] ॥४६॥
वकारो जायते ओष्ठे[9] दन्ते केचित्तु मन्यते[10]।
कखपूर्वविसर्गस्तु जिह्वामूले हि जायते ॥४७॥
शकारो जायते तालौ मूर्ध्नि षकारः मन्यते।
सकारो दृश्यते दन्ते कण्ठे हकारः जायते ॥४८॥
पफपूर्वविसर्गस्तु ओष्ठस्थाने हि जायते।
हकारो जायते कण्ठे मतसाम्यं न दृश्यते ॥४९॥

---

१. हनुमूले जिह्वामूलेन स्पर्शयति (तै० प्रा० २।३५)
२. रेफे बर्स्वमेके (ऋ० प्रा० १।४६)
३. हनुमूलेषु रेफस्य···(अ० च० १।१।२८ भाष्ये)
४. सकाररेफलकाराश्च (ऋ० प्रा० १।४५)
५. रेफे जिह्वाग्रमध्येन प्रत्यग्दन्तमूलेभ्यः (तै० प्रा० २।४१)
६. स्युर्मूर्धन्या ऋटुरषा (पा० शि १७) ऋटुरषाणां मूर्धा (पा० सू० १।१।९ सिद्धान्तकौमुद्याम्)
७. दन्तमूलेषु च लकारे (तै० प्रा० २।४२) सकाररेफलकाराश्च (ऋ० प्रा० १।४५)
८. लृलसिता दन्ते (वा० प्रा० १।६९) लृतुलसानां दन्ताः (पा० पा०
९. उवोपोपध्मा ओष्ठे (वा० प्रा० १।७० ) ओष्ठोपवाद्य नासिक्यानाम् (ऋ० प्रा० १।४७) ओष्ठे वो≍पू (ऋ० तं० ९)
१०. ओष्ठान्ताभ्यां दन्तैर्वकारे (तै० प्रा० २।४३)

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



परस्वरादिसस्थानो हकार जायते सदा[1]।
हकारो पञ्चमैर्युक्तः अन्तस्थाभिश्च संयुतः ॥५०॥
उरस्यः स तु बोधव्यः कण्ठ्यमाहुरसंयुतः[2]।
विसर्गो जायते कण्ठे[3] मतसाम्यं न दृश्यते ॥५१॥
पूर्वान्तस्य तु एकेषां सस्थानीयस्तु जायते[4]।
मुखनासिकयोर्जातं तदनुनासिकं भवेत् ॥५२॥
नासिक्यं नासिकातस्तु जायमानो भवेद् ध्रुवम्।
यमोऽपि नासिकास्थाने प्रयुक्तः स्याद् अशंसयम्[5] ॥५३॥
एकेषां यमनासिक्यं मुखनासिकयोर्भवेत्[6]।
स्यात्करणमधःकण्ठः कण्ठ्यस्य ध्वनने तथा ॥५४॥
जिह्वामूलेन जानीयाद् हनुमूल्यं हि निश्चितम्।
तालव्ये जिह्वमध्यं तु करणञ्च भवेत्सदा ॥५५॥
प्रतिवेष्ट्य तु जिह्वाग्रं मूर्धन्ये करणं भवेत्।
जिह्वाग्रेण तु भवेद्दन्त्यः जिह्वाग्रं करणं मतम् ॥५६॥
ओष्ठ्यस्तु अधरोष्ठेन जायते नात्र संशयः ॥५७॥
वर्णनामुच्चारणे तु कालः निरूप्यतेऽधुना।
मात्राम् एव विजानीयात् उच्चारणस्य मापकम् ॥५८॥

---

१. उदयस्वरादिसस्थानो हकार एकेषाम् (तै० प्रा० २।४७)

२. या० शि० १७७

३. अहविसर्जनीयाः कण्ठे (वा० प्रा० १।७१)
कण्ठस्थानौ हकारविसर्जनीयौ (तै० प्रा० २।४६)

४. पूर्वान्तसस्थानो विसर्जनीयः (तै० प्रा० २।४८)

५. नासिक्या नासिकास्थाना (तै० प्रा० २।४९) नासिकामूलेन यमाः (वा० प्रा० १।८२)

६. मुखनासिक्या वा (तै० प्रा० २।५०)

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



मात्रा निमेषकाला[1] तु विद्युत्कालेति चापरे[2]।
अङ्गुलिस्फोटनं यावत् तावत्कालस्तु मात्रिकः[3] ॥५९॥
चाषस्तु वदते मात्रां द्विमात्रां वायसोऽब्रवीत्।
शिखी त्रिमात्रो विज्ञेयो इत्येकै उच्यते बुधैः[4] ॥६०॥
सूर्यरश्मिप्रतीकाशात् कणिका यत्र दृश्यते।
आणवं तत्तु विज्ञेयम् एकेषां कथनं यथा[5] ॥६१॥
मात्राया अर्धमेव स्यात् तस्यार्धमणुसंज्ञकः।
अण्वार्धं परमाणुः स्यात् मात्रानिर्धारणं यथा ॥६२॥
एकमात्रो भवेद् ह्रस्वो द्विगुणं दीर्घमुच्यते।
त्रिगुणं प्लुतं जानीयाद् मात्रार्धकन्तु व्यञ्जनम् ॥६३॥
व्यञ्जनं त्वेकमात्रं स्यात् कौत्सस्य कथनं यथा[6] ॥६४॥
ह्रस्वस्वराच्चु नासिक्यमध्यर्धं जायते ध्रुवम्।
दीर्घात्प्लुताच्च तन्मात्रमेकमात्रमिति श्रुतम् ॥६५॥
अनुप्रदानसंसर्गौ स्थानं करणविन्ययम्।
करोति वर्णवैशिष्ट्यं मात्राकालं तथैव च ॥६६॥
एतेषां तु चतुर्णां च समाने जायते सदा।
विषमत्वेन एकस्य वैशिष्ट्यं श्रुतिगोचरे ॥६७॥
ह्रस्वदीर्घप्लुतानां तु यद्वैशिष्ट्यं भवेद् ध्रुवम्।
मात्राकालस्य वैषम्यं जायते तत्र निश्चितम् ॥६८॥
प्रथमस्तु द्वितीयेन तृतीयः चतुर्थेन च।

---

१. अक्ष्णोर्निमेषमात्रेण यो वर्णः समुदीर्यते।
स एकमात्रो ॥ (मा० शि १३७)

२. निमेषो मात्राकालः स्याद् विद्युत्कालेति चापरे ( या० शि० ८ )

३. व्यासशिक्षा २७।३

४. चाषस्तु वदते मात्रां द्विमात्रां वायसोऽब्रवीत्।
मयूरस्तु त्रिमात्रो वै मात्राणामिति संस्थितिः ॥ ( या० शि० १५ )

५ या० शि० ९

६. एकमात्रा ह्रस्वः। व्यञ्जनानि च (अ० प्र० १।२।१८-१९)

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



संसर्गस्य वैषम्यात् पृथग्रूपेण श्रूयते ॥६९॥
प्रथमे च तृतीये च अनुप्रदानकारणम् ।
द्वितीये च चतुर्थे च एवमेव भवेत्सदा ॥७०॥
तृतीयात् पञ्चमेनैव अनुनासिककारणम् ।
स्वरान्तस्थोष्मणां चैव स्पर्शस्य तु तथैव च ॥७१॥
जायते पृथक्त्वं यद् आस्यप्रयत्नकारणम् ।
अइवर्णस्वरादीनां वर्गाणां तथैव च ॥७२॥
अन्तस्थानां च ऊष्मणां स्थानं क्रमेण कारणम् ।
एवमेव तु वर्णानां वैशिष्ट्यमुपजायते ॥७३॥

॥ इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते वैदिकध्वनिविज्ञाने वर्णोच्चारणप्रकरणम् ॥

## अथ वर्णस्वरूपप्रकरणम्

विशिष्टः यः समाम्नाये वर्णस्तत्र हि दृश्यते ।
अत्र तस्य स्वरूपन्तु निरूपितं हि जायते ॥ १ ॥
सर्वत्र तु समत्वेन उच्चारणात्समाक्षराः ।
ऋवर्णस्तत्र जायते लृवर्णश्च तथैव च ॥ २ ॥
जातौ हि ऋलृवर्णो तु संश्लिष्टौ च रलोभयौ ।
पूर्वाणुमात्रो ऋकारे कण्ठ्यस्वरस्तु विद्यते ॥३॥
अपरार्धस्तु रेफश्च कण्ठ्यः पुनश्च जायते ।
पूर्वार्धमात्रो ऋकारे कण्ठ्यः संश्लिष्टो वर्तते ॥ ४ ॥
अर्धमात्रिकरेफस्तु ततः संश्लिष्ट विद्यते ।
अवशिष्टस्तु तत्र स्यात् कण्ठ्यस्य एकमात्रिकः ॥ ५ ॥
त्रिमात्रिके ऋकारे तु अन्त्यः कण्ठ्यो द्विमात्रिकः ।
कण्ठ्यरेफौ भवेद् आदौ संश्लिष्टौ ऋकारे यथा ॥६॥
एवमेव लृकारेऽपि लसंश्लिष्टश्च जायते ।
संश्लेषोऽयं भवेत्तत्र मिश्रितजलदुग्धवत् ॥ ७ ॥
अतस्तत्र पृथक्त्वं च नैव भवति सर्वदा ।
तत्र तु एकवर्णवद् श्रुतिः सर्वत्र जायते ॥ ८ ॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



एवं समाक्षरत्वं हि संश्लेषेण न बाधितम् ॥ ९ ॥

सम्मिलितौ स्वरौ यत्र सन्ध्यक्षरः मतो बुधैः ।
एकारे अइकारौ तु संश्लिष्टौ जायते ध्रुवम् ॥१०॥

ओकारे अउकारौ तु संश्लिष्टौ हि तथैव च ।
यतो हि गुणसन्धिना परिणामं च दृश्यते[1] ॥११॥

प्रातिशाख्ये विधानोऽयं न प्राप्यते क्वचित् ।
सम्भवतः तदा काले समानाक्षरवद् भवेत् ॥१२॥

सन्ध्यक्षरे स्वरद्वयोः संश्लेषः जायते ध्रुवम् ।
श्रुतिस्त्वत्रैकवर्णत् कौत्सस्य कथनं यथा[2] ॥१३॥

एओकारे तु संश्लेषः सममात्रेण जायते ।
ऐऔकारे तु सर्वत्र एवमेव न दृश्यते ॥१४॥

स्वरस्य पूर्वमात्रा तु तदर्ध्यधं प्रयोजयेत् ।
तयो सन्ध्यक्षरत्वं स्पष्टं प्रतीयते सदा ॥१५॥

॥ इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते
वैदिकध्वनिविज्ञाने वर्णस्वरूपप्रकरणम् ॥

## अथ संयोगप्रकरणम्

स्वरस्याव्यवधानेन व्यञ्जनं यत्र दृश्यते ।
संयोगः तत्र बोधव्यः पूर्वाचार्यमतं यथा ॥ १ ॥

द्वयोर्मध्ये बहूनाञ्च संयोगो जायते सदा ।
एवं व्यञ्जनसङ्घातः प्रोक्तः संयोगसंज्ञया ॥ २ ॥

संयुक्तानां प्रयोगस्तु कालाव्यहितं भवेत् ।
विशिष्टायां दशायान्तु वैशिष्ट्यं तत्र जायते ॥ ३ ॥

आस्थापितं च कर्षणं द्वित्त्वं च स्फोटनं तथा ।
स्वरभक्तिस्तु विज्ञेया संयोगेषु विशेषता ॥ ४ ॥

---

१. सन्ध्यानि सन्ध्यक्षरान्याहुरेके द्विस्थानतैतेषु तथोभयेषु (ऋ० प्रा० १३।३८)

२. सन्ध्यक्षराणि संस्पृष्टवर्णान्येकवर्णवद्वृत्तिः । लैकारौकारयोः स्यातविधौ (अ० च० १।१।४०-४१)

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



व्यञ्जनस्य विधारणम् अभिनिधानमुच्यते ।
श्वासनादेन हीनं च पीडितः सन्नतरो हि तत् ॥ ५ ॥

आस्थापितन्तु संज्ञा स्याद् भक्ष्यो भुक्तः तथैव च ॥ ६ ॥

वर्गविपर्यये जाते स्पर्शे स्पर्शस्य जायते ।
पूर्वस्याभिनिधानं तु यथोक्तं पूर्वपूर्वजैः ॥ ७ ॥

स्पर्शद्वयस्य संयोगे पूर्वस्य जायते सदा ।
न श्रुतिगोचरत्वं हि पूर्णं ध्वनिविशारदैः ॥ ८ ॥

अत एव ध्वनिः पूर्वो आस्थापितेन जायते ।
ऊष्मे परे लकारस्य शाकलस्य मतं यथा[1] ॥ ९ ॥

हकारे ङणनानां च इति कौत्सस्य चिन्तनम्[2] ।
अवग्रहपरे सर्वत्र पदान्ते चेति मन्यते[3] ॥१०॥

स्फोटनञ्च विजानीयात् स्थानात्करणमोक्षणम् ।
वर्गविपर्यये जाते कर्त्तव्यः स्फोटनः सदा ॥११॥

पूर्वेण चेद्विरामः स्यात् तत्रापि विहितं भवेत्[4] ।
न पूर्णं श्रुतिगोचरं स्यात् स्फोटनं बिना ध्वनिः ॥१२॥

वर्गस्तु वर्णमालायां स्थानक्रमेण पठ्यते ।
यथा क्रमेण स्थानन्तु तेन क्रमेण दृश्यते ॥१३॥

यत्क्रमेण मुखे स्थानं भवेदाभ्यन्तराद् बहिः ।
तेनैव वर्णमालायां प्रोक्तः जातः महर्षिभिः ॥१४॥

जिह्वामूलश्च तालुश्च मूर्धा दन्ता तथापरा ।
ओष्ठो बहिस्तु सर्वेभ्यः इति स्थानक्रमः मुखे ॥१५॥

प्रथमः जिह्वामूलीयः तालव्यश्चापरः मतः ।
ततः मूर्धन्यः बोधव्यः, दन्तश्च स्यात्ततः परः ॥१६॥

---

१. लकारस्य ऊष्मस्वपि शाकलस्य (ऋ० प्रा० ६।२०)
लकारस्योष्मसु (अ० च० १।२।५)
२. ङण्नानां हकारे (अ० च० १।२।६)
३. पदान्तावग्रहयोश्च (अ० च० १।२।४)
४. वर्गविपर्यये स्फोटनः पूर्वेण चेद्विरामः (अ० च० २।१।३८)

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



ओष्ठ्यः परस्तु सर्वेभ्यः इति वर्गक्रमः स्मृतः।
एवं क्रमेण वर्गस्तु वर्णराशौ हि दृश्यते ॥१७॥

वर्गविपर्यये जाते प्रथमस्पर्शनाद् ध्रुवम्।
द्वितीयं स्पर्शनं जातं सम्भवं स्फोटनं बिना ॥१८॥

यतो हि परवर्णस्य स्थानेऽपि वायुः विद्यते।
स्फोटनेनैव वर्णस्य श्रुतिगोचरता भवेत् ॥१९॥

अतो हि तत्र कर्त्तव्यः स्फोटनः वक्तृभिस्सदा।
येन पूर्वोऽपि वर्णश्च श्रुतिगोचरो जायते ॥२०॥

टवर्गस्य चवर्गीये कर्त्तव्यः कर्षणस्सदा।
स्फोटनापेक्षया तत्र कालस्य विप्रकर्षणम्[१] ॥२१॥

प्रतिवेष्टितजिह्वाग्रं पूर्वस्य करणं भवेत्।
स्फोटनात् करणस्य तु ऋजुत्वं जायते ध्रुवम् ॥२२॥

अत एवात्र कालस्य विप्रकर्षं स्वभावतः।
स्फोटनापेक्षया जातं नान्यत्र दृश्यते हि तत् ॥२३॥

स्फोटनो एव कालस्य विप्रकर्षात्कर्षणः स्मृतः।
अनुत्तमात्परे जाते संयोगे उत्तमे सदा।
यमागमं विजानीयात् प्रोक्तः यथा महर्षिभिः ॥२५॥

द्वयोस्पर्शनयोर्मध्ये पूर्वस्पर्शप्रभाविता।
पूर्वस्य समनासिक्या निर्गता ध्वनिः जायते ॥२६॥

निरनुनासिकस्पर्शा विंशतिरित्यसंशयम्।
अत एव यमश्चापि जायते तत्समः ध्रुवम् ॥२७॥

चतुर्धा तु यमाः ज्ञेयाः कुंखुंगुंमिति ख्यापिताः।
अल्पप्राणो अघोषश्च प्रथमा इति कुं मतः ॥२८॥

महाप्राणो अघोषश्च द्वितीयो इति खुं स्मृतः।
अल्पप्राणस्सघोषश्च तृतीयो इति गुं मतः ॥२९॥

---

१. न टवर्ग्रस्य चवर्गे कालविप्रकर्षस्त्वत्र भवति तमाहुः कर्षण इति
(अ० च० २।१।३९

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



महाप्राणस्सघोषश्च चतुर्थो इति घुं स्मृतः।
चतुर्णाञ्च यमानां तु पञ्च पञ्च समाहृताः॥३०॥

एवं विंशतिसङ्ख्याकाः यमाः प्रोक्ताः तु सूरिभिः।
चतुर्णामेव ते सर्वे निर्दिष्टा ध्वनिवादिभिः॥३१॥

द्वयोर्व्यञ्जनयोर्मध्ये स्वरभक्तिस्तु दृश्यते।
स्वरांशा सा भवेत्तत्र आगमरूपसंस्थिता॥३२॥

उच्चारणस्य सौविध्यं कारणं तत्र जायते।
नास्तीदृशं ध्वनिक्षेत्रं वैदिकवाङ्मये तथा॥३३॥

रेफाच्च व्यञ्जने जाते लकाराद्वा तथैव च।
ऋकारस्य ऌकारस्य वांशरूपा हि सा भवेत्॥३४॥

स्वरपूर्वऋकाराद्धि शौनकस्य मतं यथा[1]।
स्वरोदयोष्मणि प्राप्ते रलाभ्यां भवेत्सदा॥३५॥

ऋऌसमा तु एकेषां वाजसनेयिनां मते[2]।
रेफादूष्मणि संयोगे रेफसमा भवेद्धि सा॥३६॥

ऊष्मणः जायते द्वित्वं प्रथमे च परेऽथवा।
न तत्र स्वरभक्तिस्तु भणन्ति तैत्तिरीयकाः[3]॥३७॥

स्वरोदयोष्मवर्णे च रेफादर्ध-अकारवत्।
अकारस्यार्धमात्रिका वा कौत्सस्य मतं यथा॥३८॥

अन्ये च व्यञ्जने जाते चतुर्थं वाष्टमं हि सा[4]।
स्वरभक्तेरभावस्तु सर्वत्रैको विधीयते[5]॥३९॥

अत्र यन्मतवैभिन्यं शाखाविभेदकारणम्।
करिणी कुर्विणी चैव हरिणी हरिता तथा॥४०॥

---

१. रेफात्स्वरोपहिताद् व्यञ्जनोदयादृकारवर्णा स्वरभक्तिरुत्तरा (ऋ० प्रा० ६।४६)

२. रलावृऌवर्णाभ्यामूष्मणि स्वरोदये सर्वत्र (वा० प्रा० ४।१७)

३. रेफोष्मसंयोगे रेफस्वरभक्तिः। न क्रमे प्रथमपरे (तै० प्रा० २१।१५, १६)

४. रेफादूष्मणि स्वरपरे स्वरभक्तिरकारस्यार्धं चतुर्थमित्येके। अन्यस्मिन्व्यञ्जने चतुर्थमष्टमं वा (अ० च० १।४।१०, ११)

५. सर्वत्रैके स्वरभक्तेरभावम् (ऋ० प्रा० ६।५०)

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



तद्वद् हंसपदा ज्ञेया पञ्चैताः स्वरभक्तयः ।
करिणी रहसंयोगे कुर्विणी ळहकारयोः ॥४१॥

हरिणी रशसंयोगे हरिता लशकारयोः ।
या तु हंसपदा ख्याता सा तु रेफषकारयोः ॥४२॥

स्वरभक्तिस्तु बोधव्या ह्रस्वी द्राघीयसी द्विधा ।
ऊष्मपरा तु दीर्घा स्यात्[1] सार्धकाला भवेत्सदा[2] ॥४३॥

द्वित्वे ऊष्मण ह्रस्वी स्यात्[3] सा अर्धोना भवेद् ध्रुवम्[4] ।
एवं स्वरस्य भक्तिस्तु निरूपिता भवेत्सदा ॥४४॥

यत्र व्यञ्जनसंयोगे एकस्योच्चारणं द्वयम् ।
तत्र द्वित्वं विजानीयात् क्रमं वा अपरे विदुः ॥४५॥

द्वित्वेन द्वित्वजं ज्ञेयं क्रमजं वा तथापरे ।
यन्निष्पन्नं तु आगमम् इति ध्वनिविदां मतम् ॥४६॥

संयोगादेस्तु वर्णस्य स्वरपूर्वस्य सर्वदा ।
उच्चारणं द्वयं जातं नास्त्यत्र काऽपि संशयः ॥४७॥

सस्थाने[5] सवर्णे[6] वा द्वित्वं केचिन्तु मन्यते ।
परस्परेण संयोगः स्पर्शानां भवेद् यदि ॥४८॥

तत्पूर्वस्य श्रुतिर्नास्ति तत्र आस्थापितं भवेत् ।
संयोगादौ रकारस्तु द्वित्व न भजते ध्रुवम्[7] ॥४९॥

एवमेव लकारस्तु शौनकस्य मतं यथा ।
ताभ्यां परस्य वर्णस्य द्वित्वं जायते सदा[8] ॥५०॥

---

१. द्राघीयसी तूष्मपरा (ऋ० प्रा० ६।४८)
२. द्राघीयसी सार्धकाला (ऋ० प्रा० १।३३)
३. इतरा क्रमे (ऋ० प्रा० ६।४९)
४. अर्धोनान्या (ऋ० प्रा० १।३५)
५. सस्थाने (अ० च० ३।२।५)
६. सवर्णे (वा० प्रा० ४।१२२) सवर्णसवर्गीयपरः (तै० प्रा० १४।२३)
७. न रेफः (ऋ० प्रा० ६।८)
८. परं रेफात् । स्पर्श एव लकारात् (ऋ० प्रा० ६।४, ५)

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



लकाराच्च वकाराच्च पौष्करसादिरुच्यते[1]।
ऊष्मवर्णात्परस्य तु स्पर्शस्योच्चारणं द्वयम् ॥५१॥
विकल्पेन हि जायते शौनकस्य मतं यथा[2]।
अन्तस्थादूष्मणश्चैव कात्यायनस्तु मन्यते[3] ॥५२॥
ऋवर्णे तु परे जाते द्वित्वं निषिध्यते ध्रुवम्[4]।
लृवर्णे च[5] यमे चापि[6] द्वित्वं तु नैव जायते ॥५३॥
त्रिव्यञ्जनसंयोगे द्वित्वं निषिध्यते सदा[7]।
व्यञ्जनस्य पदान्तस्य द्वित्वमेके तु मन्यते[8] ॥५४॥
ह्रस्वोपधङकारस्य नकारस्य तथैव च।
पदान्ते जायते द्वित्वं स्वरपरे भवेद् यदि[9] ॥५५॥

॥ इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते वैदिकध्वनिविज्ञाने संयोगप्रकरणम् ॥

## अथ स्वरप्रकरणम्

स्वरवर्णे उदात्तस्तु अनुदात्तः तथैव च।
स्वरस्तु जायते स्वारः स्वरस्य धर्म एव सः ॥ १ ॥

---

१. लवकारपूर्वस्पर्शश्च पौष्करसादेः (तै० प्रा० १४।२)
२. ऊष्मणो वा (ऋ० प्रा० ६।६)
३. ऊष्मान्तस्थाभ्यश्च स्पर्शः (वा० प्रा० ४।१०३)
४. ऋवर्णे (वा० प्रा० ४।११३)
५. लृवर्णे (वा० प्रा० ४।११४)
६. यमे (वा० प्रा० ४।११५)
७. त्रिप्रभृतिषु शाकटायनः (पा० व्या० ८।४।५०)
८. पदान्ते व्यञ्जनं द्विः (अ० च० ३।२।१)
९. ङणना ह्रस्वोपधाः स्वरे (अ० च० ३।२।२)
उत्तरे स्वरे (ऋ० प्रा० ६।१५)
ङनौ चेद्ध्रस्वपूर्वौ स्वरे पदान्ते (वा० प्रा० ४।१०८)

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



व्यञ्जनं स्वाङ्गिना जातं स्वरेणोच्चारितं सदा।
तत्तु परस्वरस्यैव अङ्गं भवति निश्चितम् ॥ २ ॥
संयोगादिस्तु पूर्वस्य पदान्तस्तु तथैव च।
द्वित्वजं व्यञ्जनं यत्तु पूर्वस्य वा परस्य वा ॥ ३ ॥
रकाराद्वा हकाराद्वा यत्र द्वित्वं हि जायते।
तत्र तु सह पूर्वेण द्वित्वं पूर्वस्य जायते ॥ ४ ॥
अनुस्वारो यमश्चैव स्वरभक्तिस्तथैव च।
विसर्गो भजते अङ्गं पूर्वस्य च यथामतम् ॥ ५ ॥
उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः।
स्वरप्रधानत्रैस्वर्यं प्रोक्तं यथा महर्षिभिः ॥ ६ ॥
उच्चैरुच्चार्यते यस्तु उदात्त इति कथ्यते।
स्थानेषु ऊर्ध्वभागेन तस्योच्चारणं जायते ॥ ७ ॥
नीचैस्तु अनुदात्तः स्याद् अधोभागेन जायते।
उच्चनीचसमाहारो स्वरिते तु भवेत्सदा ॥ ८ ॥
उदात्तादनुदात्तस्य स्वरितो जायते ध्रुवम्।
स्वरिते वा उदात्ते वा स्वरितत्वं न जायते ॥ ९ ॥
स्वरितादनुदात्तस्तु उदात्तश्रुतिना सदा।
उच्चार्यो जायते तत्र प्रचयसंज्ञया मतः ॥१०॥
अनेकोऽप्यनुदात्तस्तु प्रचयो जायते ध्रुवम्।
स्वरिते वा उदात्ते वा प्रचयत्वं न जायते ॥११॥
स्वरितस्तु द्विधा ज्ञेयाः स्वतन्त्रश्च पराश्रितः।
नित्यश्च सन्धिजश्चैव स्वतन्त्रस्तु द्विधा मत. ॥१२॥
यकारे च वकारे च एकपदे भवेद् यदा।
स्वरितः स नित्यो ज्ञेयः प्रोक्तः यथा महर्षिभिः ॥१३॥
उदात्ताद्वा अपूर्वाद्वा द्विधास्तु उच्यते बुधैः।
सन्धिजाश्च त्रिधा ज्ञेया विकारेण च जायते ॥१४॥
सन्धिनाम्ना हि एतेषां संज्ञा प्रोक्ता महर्षिभिः।
क्षैप्रोऽभिनिहितश्चैव प्रश्लिष्टस्तु तथा भवेत् ॥१५॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



युकारयोर्भवेद् यत्र य्वकारौ यणसन्धिना।
क्षैप्रं तं विजानीयात् शौनकस्य यथा मतम ॥१६॥

पूर्वस्य तु उदात्तस्य यवकारः भवेद् यदा।
परस्य चानुदात्तस्य स्वरितो जायते ध्रुवम् ॥१७॥

स एव क्षैप्रसंज्ञस्तु स्वरित उच्यते बुधैः।
क्षैप्रसन्धिविकाराद्धि क्षैप्रसंज्ञाभिधीयते ॥१८॥

एकारोदात्तस्वराद्वा ओकाराद्वा तथैव च।
अकारस्यानुदात्तस्य पूर्वरूपस्तु जायते ॥१६॥

स त्वभिनिहितः ज्ञेयः शौनकस्य मतं यथा।
अभिनिहितसन्धिना सः तु एवं हि जायते ॥२०॥

पूर्वरूपे उदात्तस्य स्वरितः जायते सदा।
स एवाभिनिहितः ज्ञेयः प्रोक्तः पूर्वमहर्षिभिः ॥२१॥

दीर्घसन्धिस्तु जानीयात् प्रश्लिष्टसंज्ञया यथा।
तथैव तु भवेत्तत्र प्रश्लिष्टः स्वरितः स्वरः ॥२२॥

उच्चस्वरादिकाराच्च दीर्घभावस्तु दृश्यते।
इकारस्यानुदात्तस्य प्रश्लिष्टस्तत्र जायते ॥२३॥

एकेषान्तु उकारस्य प्रश्लिष्टत्वं हि दृश्यते[1]।
परतन्त्रो विनिश्चेयो उदात्तस्याश्रितः स्वरः ॥२४॥

तैरोयुक्तस्तु वैवृतः विरामश्च तथा भवेत्।
व्यञ्जनश्च तृतीयः स्याद् एते पराश्रिताः स्वराः ॥२५॥

व्यञ्जनेन व्यञ्जनतस्तु तैरोव्यञ्जन जायते।
विरामेन विरामस्तु विवृत्या वैवृतः तथा ॥२६॥

द्वयोरुदात्तयोर्मध्ये अनुदात्तो य दृश्यते।
ताथाभाव्यः स्वरो बोध्यः एकेषां तु मतं यथा[2] ॥२७॥

स्वरिते वा उदात्ते वा स्वरितस्योच्चारणं सदा।
कम्पेन जायते तत्र कम्पो बोध्यः महर्षिभिः ॥२८॥

---

१. उभावे प्राश्लिष्टः (तै० प्रा० २०।६)
२. उदाद्यन्तो न्यवग्रहस्ताथाभाव्यः (वा० प्रा० १।१२०)

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



जात्योऽभिनिहितश्चैव क्षैप्रः प्रश्लिष्ट एव च।
एते स्वराः प्रकम्पन्ते उदात्ते स्वरितेऽथ वा ॥२९॥

उदात्ते वा स्वरिते वा उदात्तात्स्वरितः सदा।
नैव हि जायते तत्र अनुदात्तमभीप्सितम् ॥३०॥

जात्येऽभिनिहिते क्षैप्रे प्रश्लिष्टे तु तथैव च।
एते स्वराः प्रकम्पन्ते नास्त्यत्र कोऽपि संशयः ॥३१॥

पूर्वस्तु स्वरितस्यैव उदात्तसम जायते।
अनुदात्त परो ज्ञेयः प्रोक्तः यथा महर्षिभिः ॥३२॥

ध्वन्यारोह उदात्ते तु अनुदात्ते तथैव च।
अवरोहो भवेत्सम्यग् ध्वनिज्ञानां मतं यथा ॥३४॥

पूर्वापरोच्चयोर्मध्येऽनुदात्तस्यावरोहरणम् ।
विकम्पितं भवेत्सः तु कम्प इत्युच्यते मुदा ॥३५॥

यथा हि स्वरवर्णस्य सन्धिस्तु जायते ध्रुवम्।
तथैव स्वरधर्मस्य सन्धिः भवति निश्चितम ॥३६॥

एकादेश उदात्तेन उदात्तो जायते सदा।
सन्धिजाः स्वरिता ह्यत्र अपवादेन दृश्यते ॥३६॥

॥ इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते वैदिकध्वनिविज्ञाने स्वरप्रकरणम् ॥

## अथ सन्धिप्रकरणम्

वर्णानामतिसामीप्यं संहिता उच्यते बुधैः।
सन्धिनाम्ना तु सा ख्याता अन्यैः पूर्वमहर्षिभिः ॥ १ ॥

सैव स्वाभाविकी जाता सौविध्यं तत्र कारणम्।
उच्चारणस्य सौविध्यात् सा तु भवत्यसंशयम् ॥ २ ॥

वैशिष्ट्यं जायते यैस्तु वर्णेष्वूच्चारणे सदा।
तेष्वेवोच्चारणस्य स्यात् सौविध्यं सन्धिना मतम् ॥ ३ ॥

अनुप्रदानसंसर्गौ स्थानं करणविन्ययम्।
जायते वर्णसौविध्यं कालस्तु पञ्चमो भवेत् ॥ ४ ॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha

1772



सन्धिना यत्र वर्णानां विकारं दृश्यतेऽथवा।
लोपो वा आगमो वा स्यात् प्रकृत्या वा भवेत्क्वचित् ॥५॥

तत्रोच्चारणसौविध्यं जायते इति मन्यते।
सौविध्यमेव जायते सन्धिनोच्चारणे ध्रुवम् ॥ ६ ॥

स्वराणां तु विकारं यत् पञ्चधा उच्यते बुधैः।
प्रथमो दीर्घभावस्तु द्वितीयो गुण उच्यते ॥ ७ ॥

यण्भावो अपरो ज्ञेयः वृद्धिभावश्चतुर्थकः।
अयादिः पञ्चमो वोध्यः एते हि स्वरसन्धयः ॥ ८ ॥

स्वसवर्णे स्वरे जाते दीर्घमापद्यते स्वरः।
सन्ध्यभावे तु द्वौ वर्णौ पृथगुच्चारितौ मुदा ॥ ९ ॥

आभ्यन्तरश्च बाह्यश्च कार्यस्तु द्विगुणस्तथा।
सन्धिजाते प्रयत्नस्तु बारमेकमपेक्षते ॥१०॥

पूर्वापरश्च ह्रस्वश्चेद् द्विमात्रोच्चारणं भवेत्।
विवृतिकालसौविध्यम् अनुभूतमसंशयम् ॥११॥

ह्रस्वदीर्घौ पुनः यत्र दीर्घह्रस्वौ तथैव च।
विवृत्या सह मात्रायाः सौविध्यमुपजायते ॥१२॥

दीर्घौ तु दृश्यते यत्र द्विमात्रा विवृतिस्तथा।
एवं दीर्घभावे तु सौकर्यमुपजायते ॥१३॥

अवर्णेवर्णयोश्चैव अवर्णोवर्णयोस्तथा।
क्रमात्तु यत्र एकारो ओकारश्च तथा भवेत् ॥१४॥

गुणसन्धिर्भवेत्सः तु उक्तः पूर्वमहर्षिभिः।
बाह्यमुखप्रयत्ने तु सौविध्यमुपजायते ॥१५॥

दीर्घवत्सुकरत्वं स्यात् काले चेति विनिश्चितम्।
सन्ध्यक्षरं भवेत्तत्र स्थानद्वयस्य निश्चितम् ॥१६॥

सौविध्यं तु विकारेण स्थानेऽपि जायते ध्रुवम्।
सन्ध्यभावे तु सौकर्यं न भवत्यत्र निश्चितम् ॥१७॥

अवर्णाच्च ऋकारस्य रेफस्तु जायते सदा।
ऌकारस्तु ऌकारस्य सोऽपि गुणेन उच्यते ॥१८॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



व्रिकारेणात्र संश्लिष्टं व्यञ्जनमवशिष्यते।
सस्थानीय ऋकारस्य रेफस्तु जायते ध्रुवम् ॥१९॥

ऌकारस्य लकारस्तु सस्थानीयः तथैव च।
विवृत्या सह मात्रायाः सौकर्यमपि जायते ॥२०॥

असवर्णे स्वरे जाते इवर्णस्य भवेत्सदा।
यकारस्तु विनिश्चेयः यण्भावो उच्यते बुधैः ॥२१॥

उवर्णस्य वकारस्तु तथैव जायते ध्रुवम्।
यभावश्च वभावश्च यण्सन्धिना उच्यते मुदा ॥२२॥

दृश्येते यत्र द्वौ ह्रस्वौ सन्ध्यभावे भवेत्सदा।
विवृत्या सह मात्रायाः कालद्वयमपेक्षितम ॥२३॥

सन्धिना तु तयोः जाते मात्रमेकमपेक्षते।
ह्रस्वदीर्घौ पुनः यत्र दृश्यते सन्धिना क्वचित् ॥२४॥

विवृत्या सह मात्रायाः सुकरत्वं तथा भवेत्।
दीर्घह्रस्वौ भवेद् यत्र सन्धिना तत्र जायते ॥२५॥

विवृतिं द्विगुणां मात्रां सौकर्यन्तु विनिश्चितम्।
दृश्येते यत्र द्वौ दीर्घौ तत्रापि हीदृशं भवेत् ॥२६॥

एऐकारे परे जाते ओऔकारे तथैव च।
एकादेशस्तु ऐकार औकारश्च अनुक्रमात् ॥२७॥

अवर्णस्य भवेद्यत्र वृद्धिभावः स उच्यते।
दीर्घवत्सुकरत्वं तु बाह्यमुखप्रयत्नयोः ॥२८॥

यदि ह्रस्वस्तु पूर्वः स्यात् सन्धिभावे तथैव च।
विवृत्या सह मात्रायाः सौविध्यमुपजायते ॥२९॥

दीर्घन्तु दृश्यते यत्र द्विमात्रां विवृतं तथा।
सौविध्यन्तु विकारेण स्थानेऽपि जायते ध्रुवम् ॥३०॥

अय्भावो जायते यत्र एकारस्य स्वरे परे।
आय्भावोऽपि भवेद् यत्र ऐकारस्य स्वरे परे ॥३१॥

ओकारस्य तु अव्भावः वृद्धिसंसः स्मृतो भवेत्।
औकारस्य तु आव्भाव एवमेव मतं सदा ॥३२॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha

1998



अयादिसन्धिरेषस्तु प्रोक्तः पूर्वमहर्षिभिः।
अत्र सन्ध्यक्षरस्य तु परांशः जायते सदा ॥३३॥

स्वरस्य एव रूस्थानीयम् अर्धस्वरं निसंशयम्।
यद्यपि वाह्यप्रयत्नस्य आधिक्यमत्र जायते ॥३४॥

तदपि कालसौविध्यम् अनुभूतं हि जायते।
तयोस्तु स्वरयोर्मध्ये विवृतिः या तु विद्यते ॥३५॥

सन्धिना तद्भावस्तु सर्वत्र दृश्यते सदा।
एवमेवात्र सौविध्यं सन्धिना जायते ध्रुवम् ॥३६॥

ओकारात्तु अकारस्य पूर्वरूपो भवेत्सदा।
एकारादपि दृश्यते पूर्वरूपः तथैव च ॥३७॥

बाह्यमुखप्रयत्ने तु सौकर्यमुपजायते।
विवृत्या सहमात्रायाः कालोऽवशिष्यते ध्रुवम् ॥३८॥

व्यञ्जनस्य तु यः सन्धिः द्विधः सः ज्ञायते मुदा।
विसर्गव्यतिरिक्तस्तु विसर्गो अपरो मतः ॥३९॥

सघोषे तु परे जाते स्वरे परे तथैव च।
प्रथमस्य तृतीयः स्याद् बाह्ययत्नं तु कारणम् ॥४०॥

प्रथमस्तु अघोषो हि विवारं यत्नमिष्यते।
घोषाणां स्वराणाञ्च संवारं जायते सदा ॥४१॥

प्रथमे स्वरतन्त्रीणां सङ्कोचमुपजायते।
संवारेण ततस्तासां विकोचनमभीप्सितम् ॥४२॥

एवमघोषघोषयोः काठिन्यं जायते सदा।
सन्धिना तु प्रयोगे हि सौकर्यमुपजायते ॥४३॥

प्रथमस्य तृतीयस्तु सघोषः सः हि जायते।
विकोचनेन तत्र हि सुकरत्वमसंशयम् ॥४४॥

उत्तमे तु परे जाते प्रथमस्य भवेत्सदा।
सस्थानीयोऽनुनासिक्यः सौविध्यं तत्र कारणम् ॥४५॥

पूर्वस्यास्फोटनात्पूर्वं परस्योच्चारणं कृते।
नासिकातः सरन्वायुः निःसरति सदा बहिः ॥४६॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



अत्र तस्य प्रयोगे तु काठिन्यमुपजायते ।
सन्धिना त्वूत्तमे जाते सारल्यं दृश्यते सदा ॥४७॥

टवर्गे तु परे जाते चवर्गेऽपि तथैव च ।
परसमसस्थानीयः तवर्गस्य भवेत्सदा ॥४८॥

टवर्गस्य चवर्गस्य मुखे स्थानं तु दृश्यते ।
स्थानात्पूर्वं तवर्गस्य तद्भवति असंशयम् ॥४९॥

पूर्वस्य स्पर्शने जाते स्थानकरणमोक्षं विना ।
स्पर्शनं तु भवेत् तत्र परस्योच्चारणं कृते ॥५०॥

एवं हि सम्भवं जातं स्थानं पूर्वं तु विद्यते ।
काठिन्यं जायते अत्र पूर्वस्योच्चारणे सदा ॥५१॥

सन्धिना तु परसस्थाने सौविध्येनोपजायते ।
एवं व्यञ्जनसन्धिना तु प्रयोगे भवेत्सदा ॥५२॥

विसर्गः परसस्थान ऊष्मः स्पर्शे सदा ।
ऊष्मण्येव परे जाते परसस्थानोष्म जायते ॥५३॥

तत्र स्थानस्य सौविध्यं सन्धिना जायते ध्रुवम ।
पूर्वेण च विसर्गस्य ओकारः जायते यदा ॥५४॥

बाह्याभ्यान्तरयत्नस्य सौकर्यं तत्र दृश्यते ।
स्थानेऽपि तद् विजानीयाद् नास्त्यत्र कोऽपि संशयः ॥५५॥

लोपो जातो विसर्गस्य सघोषे वा स्वरेऽथवा ।
बाह्याभ्यन्तरस्य स्थानस्य तु तथैव च ॥५६॥

सौकर्यमनुभूतं हि ध्वन्युच्चारणकर्तृभिः ।
एवं सर्वत्र सन्धिना सौकर्यमुपजायते ॥५७॥

छन्दसि यत्प्रकृत्या तु छन्दो हि तत्र कारणम् ।
प्राकृतं वा विजानीयाद् इति ध्वनिविदां मतः ॥५८॥

॥ इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते
वैदिकध्वनिविज्ञाने सन्धिप्रकरणम् ॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



## ग्रन्थकार-परिचयः

शण्डिलस्य कुले जातः चक्रो नाम महामुनिः।
विद्याशीलसमायुक्तो ज्ञानसम्पन्नधीः शमी ॥ १॥

पिण्डीग्रामे निवासोऽस्य सरयूपश्चिमे तटे।
देवरियाख्यमण्डले सरुवारक्षेत्रे शुभे ॥ २ ॥

देवभाषाप्रसाराय परित्यज्य निजस्थलम्।
गाजीपुरं समागत्य सिद्धपुरस्य सन्निधौ ॥ ३ ॥

देवनद्यतिसामीप्ये विधाय वसतीं स्वयम्।
विद्याध्यापनकार्ये तु संलग्नः स महामतिः ॥ ४ ॥

पाठनकार्यसंयुक्तात् पाठक इति विश्रुतः।
ततो वंशोद्भवैस्तस्य तदुपाधिरङ्गीकृतः ॥ ५ ॥

नाम्ना स्थानन्तु तस्यैव चक्रपुरमिति श्रुतम्।
तदधुना गते काले चकिया नाम विश्रुतम् ॥ ६ ॥

तस्य द्वौ तनयौ जातौ मथुराविष्णुनामकौ।
तयोश्च विष्णुरग्रजः मथुरा तु कनिष्ठिकः ॥ ७ ॥

तावपि वाक्प्रसाराय संलग्नौ स्वपितुः समः।
विष्णुपुरी मथुरेति ख्यातं चक्रपुरं ततः ॥ ८ ॥

समायातं जने तच्च विद्वद्भिः समलङ्कृतम्।
विष्णोः षष्ठान्वये जातो गङ्गानामकपण्डितः ॥ ९ ॥

तस्य द्वौ तनयौ जातौ देवीभवननामकौ।
धीयुक्तो भवनश्चासीद् अस्माकं प्रपितामहः ॥१०॥

भारी नाम्ना श्रुता तस्य पत्नी च पृथिवीतले।
तज्जः सत्यनारायणो अजनयत्सुतांस्त्रयान् ॥११॥

अक्षयवरो अग्रजः चन्द्रमणिः कनिष्ठिकः।
दशरथस्तु मध्यमः जनको विद्यते मम ॥१२॥

तेषां कनिष्ठचन्द्रस्तु कर्मकाण्डधुरन्धरः।
दशरथोऽपि मर्मज्ञः ख्यातिलब्धः प्रतिष्ठितः ॥१३॥

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha



वदामी नाम माता तु पूजनीयास्ति मत्कृते।
भ्रातरावपि मे द्वौ स्तः कृपाशङ्करमध्यमः ॥१४॥

शङ्करेण समायुक्तो गिरिजा च कनिष्ठिकः।
सर्वकनिष्ठिको जातो विजयस्तु यमालयम् ॥१५॥

गृहिण्या शारदाख्यया काश्यां हि निवसन् त्वहम्।
प्रभाकलाभिधानाभ्यां युक्ताभ्यां शशिना सह।१६॥

दुहितृभ्यां समायुक्तः कनिष्ठसुधीरेण च।
पीयूषेण सुशीलेन त्रिभिः पुत्रैश्च संयुतः ॥१७॥

अभिन्नेन सुमित्रेण रवीन्द्रेण विभूषितः।
जमुनापाठकश्चाहं ग्रन्थकारो यथामतिः ।.१८॥

॥ इति शंभवतु ॥

## शुद्धिपत्रम्

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| १ | १० | कृत | कृतं |
| | १९ | प्लुतस्थता | प्लुतस्तथा |
| ४ | १३ | समाख्यातः | समाख्याताः |
| | १४ | वाङ्मय | वाङ्मय |
| | २३ | वर्णमुत्पा | वर्णानुत्पा |
| | २६ | विकृतम् | विकृतः |
| ६ | ८ | स्थराणां | स्वराणां |
| ८ | २४ | पा० पा० | पा० व्या० |
| | | | १।१ ९ सिद्धांत कौमुद्याम् |
| ९ | ५ | पूर्वान्तस्य तु | पूर्वान्तस्य हि |
| १० | ४ | विज्ञेयो | विज्ञेय |
| | ८ | अव्वाधं | अव्वधं |
| | २५ | वापसो | वायसो |
| ११ | १८ | मात्रो | मात्र |
| ११ | ९ | वर्णात् | वर्णवत् |
| | २१ | व्यहितं | व्यवहितं |
| १३ | ८ | पूर्वा | पूर्वः |
| | १५ | पूर्णं | पूर्णा |
| | १५ | श्रुतिगोचरं | श्रुतिगोचरा |
| | २१ | सर्वेव्यः | सर्वेभ्यः |
| १४ | १९ | प्रभाविता | प्रभावितः |
| | २० | नासिक्या निर्गता | नासिक्यः निर्गतो |
| | २२ | कुखु गुमिति | कुं खुं गुघुमिति |
| | २३ | प्रथमो | द्रथम |
| | २४ | द्वितीयो | द्वितीय |
| | २५ | तृतीयो | तृतीय |
| १५ | १ | चतुर्थो | चतुर्थं |

CC-0, Panini Kanya Maha Vidyalaya Collection.

Digitized By SIddhanta eGangotri Gyaan Kosha

## ग्रन्थकार की अन्य कृतियाँ

### अथर्ववेदीया चतुरध्यायिका
### निर्मलभाष्योपेता ( यन्त्रस्थ )

अथर्ववेदीया चतुरध्यायिका अथर्ववेद के चरण
संहिताओं का प्रातिशाख्य-ग्रन्थ है। अद्यावधि इस प
संस्कृत-भाष्य और न ही हिन्दी व्याख्या उपलब्ध है। ग्रन्थकार ने इस न्यूनता को दूर करने के लिए 'निर्मलभाष्य' नामक संस्कृतभाष्य तथा हिन्दी-व्याख्या से संवलित कर इस ग्रन्थ को वैदिक-अध्येताओं के लिए सुगम तथा बोधगम्य बना दिया है। इसमें चतुरध्यायिका के सभी सूत्रों की उपयोगिता तथा समीचीनता को स्थापित किया गया है। साथ ही ध्वनि-वैज्ञानिक तथ्यों का सूक्ष्म-विश्लेषण प्रस्तुत किया गया है। यह ग्रन्थ वैदिक अध्येताओं के लिये परम उपयोगी होगा।

### लोकगीत-शतकम् [ यन्त्रस्थ ]

सम्प्रति प्रचलित लोकगीतों की ध्वनियों में गेय संस्कृत के गीतों के माध्यम से संस्कृत-भाषा को सरलता-पूर्वक जनसामान्य तक पहुँचाया जा सकता है। इसी उद्देश्य से इस ग्रन्थ का प्रणयन किया गया है। इस ग्रन्थ में संस्कृत-भाषा में विरचित १०० लोकगीत है जो उत्तर-प्रदेश में प्रचलित लोकगीतों जैसे—कजली, होली, सोहर आदि ध्वनियों में गेय हैं। इनके अतिरिक्त निर्गुण, चलचित्रपटीय (फिल्मी) ध्वनियों में गेय गीत हैं। इन गीतों को वाद्ययन्त्रों के साथ गाया जा सकता है। भाषा सरल होने से इनके अर्थ का भी अवबोध सरलता-पूर्वक हो जाता है।

### व्याख्या-ग्रन्थ

अभिज्ञानशाकुन्तल, अभिषेकनाटक, चन्द्रकलानाटिका आदि ग्रन्थों की संस्कृत तथा हिन्दी में व्याख्या भी ग्रंथकार ने की है।



CC-0, Panini Kanya Maha Vidyalaya Collection.